ॐ

# श्रीशङ्करादिपञ्चदेव स्तोत्रपञ्चकम् ।

# चित्तत्त्वनिरूपणञ्च ।

श्रीशङ्करब्रह्मण्यदेवतीर्थस्वामिभिर्वि-
रचितम् ।

फरुखाबादस्थ वणिग्वर श्रीबबूलाल बागला
शुल्केन प्रकाशितम् ।

---

श्रीकाशधाम्
श्रीअक्षयकुमार मुखोपाध्यायेन महामण्डल मुद्रणालये
मुद्रितम् ।

---

विक्रमीये रससप्ताङ्कभू १९७६ वर्षे ।

श्रीशङ्करब्रह्मण्यदेवतीर्थस्वामी ।



अयमेव पूर्वाश्रमे कुन्नयशास्त्रिनामा स्वप्रणीतयोगमञ्जरी
व्याख्यानरूपयोगमकरन्दकर्ता ।

नमः शिवाय ।



# अथ शङ्कराष्टकम् ।

कदाचित्कैलासे गिरिवरसुतासङ्गमुदितो
वसानो वैयाघ्रं मुनिगणमुखोद्गीतमहिमा ॥
पिनाकी भूतेशो रचितनटवेषोऽखिलगुरु-
र्जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ १ ॥
भुजे सव्ये शूलं शिरसि सुरसेव्यां सुरनदीं
ललाटे शीतांशुं निशितपरशुं दक्षिणकरे ॥
दधानो देवेशो भुजगपतिहारी त्रिनयनो
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ २ ॥
वदान्यस्सम्मान्यः-श्रुतिशतशिरोगीतचरितः
शरण्यो ब्रह्मण्यो विरतगणगण्यो गिरिशयः ॥

कपर्द्दी भस्माङ्गो दुरितदलनाबद्धहृदयो
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ ३ ॥
मखारिः कामारिर्भुवनभयहारी पुररिपु
र्मनोहारी शर्वः-श्रुतिवनविहारी पशुपतिः ॥
वरेण्यो भ्राजिष्णुर्भ्रमपटलभङ्गैकनिपुणो
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ ४ ॥
दुराराध्योऽत्राध्यस्सकलकलनाबन्धविधुरो
भवाध्यन्तो लक्ष्यो निगमवचसां भेदरहितः ॥
शिवश्शान्तश्शुद्धो निजजनकृपाक्रान्तहृदयो
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ ५ ॥
न यस्यान्तं यातोऽखिलसुरगणाराधितपदो
रमाकान्तो विष्णुस्सकलसुरवन्द्यो विधिरपि ॥
गतान्येषां गाथा चकितमभिधत्ते श्रुतिरभी
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ ६ ॥
न याचे साम्राज्यं कनकरुचिरं चेन्द्र भवनं
नवा रम्या रामा नच सुतशताढ्यं सुविभवम् ॥

परं याचे याचे तव चरणसेवां पशुपते
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ ७ ॥
दयासिन्धो सेन्दो निखिलभवबन्धो सुरगुरो
हर त्वं संसारं विगतसुखसारं सुखनिधे ॥
न वै जाने जाने वरद वरदेशं त्वदपरं
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥ ८ ॥
शङ्करे यो मनः कृत्वा शङ्करं शङ्कराष्टकम् ।
पठेन्मर्त्यो मुदायुक्तः शङ्करेण प्रमोदते ॥ ९ ॥

इति श्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धनमठाधीश्वर
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामि शिष्य-
पण्डितस्वामि श्रीशङ्कर ब्रह्मण्यदेवतीर्थ-
विरचितं शङ्कराष्टकम् ।

---



जगदम्बायैनमः ।



# अथ जगदम्बाष्टकम् ।

जनाः केचित्त्वत्तो जननि निजजाड्यं शमयितुं ।
यतन्ते ऽहोरात्रं नवतरसुखं लब्धुमपरे ॥
स्तुवन्ति त्वां नित्यं यजनविधिसक्तास्तदितरे ।
जगन्मातर्याचे तव चरणसेवांसुखवहाम् ॥ १ ॥
पठित्वा शास्त्रौघाङ्कुलिशतरहस्यानुनुपमान् ।
जना जायन्ते ये तव भजन भावैकविधुराः ॥
समर्थः कस्त्रातुं त्वदनुस्मृतिहीनां स्त्रिजगति ।
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ २ ॥

न शक्तः स्रष्टुं को हरिरपि न शक्तस्सुखयितुं ।
हरो हर्तुं नो वै जगदिदमशेषं श्रुतिनुते ॥
विना शक्तिं शक्ते जगति किमु दृष्टो रचयितुं ।
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ ३ ॥
निमित्तं किं कालः प्रकृतिरथवेशः किमणवः ।
स्वभावो वा सृष्टेरिति च विवदन्तां जडधियः ॥
त्वमेवास्या हेतुर्भवति तव हेतुर्न भवति ।
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ ४ ॥
जगद्भानुर्भानुर्नहि भवति भानुस्तवपुरो ।
जगच्चन्द्रश्चन्द्रस्त्रसति तव दृष्ट्वा मुखकलाम् ॥
महत्त्वन्ते मातर्हरिहरविरञ्चा न मिमते ।
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ ५ ॥
पदन्मे माहेशं गणपतिपदं वा न रुचितं ।
नवा विद्याधीशामलमुनिवरालाभिलषितम् ॥
न नाकेन्द्रस्थानं विबुधरमणीगीतलसितम् ।
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ ६ ॥

त्यजेद् धर्म्मं धर्त्री जलमपि जलत्वं परिहरे ।
न्यसेदौष्ण्यं वह्निर्गमनमपि जह्याज्जवगतिः ॥
क्षिपेत् खत्वं खं नो क्षिपति जननी जातु ममतां
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ ७ ॥
क्षुधाक्रान्ताः श्रान्ता विकलकरणा दीनमनसो ।
यथा वालास्तूर्णं तरुणकरुणां यान्ति जननीम् ॥
तथा तूर्णं मातः शरणमुपयातोऽस्मि भवतीम् ।
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥ ८ ॥
जगन्मातुरिदं स्तोत्रं यः पठेच्छ्रद्धयान्वितः ।
भुक्तिमुक्ती समाप्नोति जगदम्बाप्रसादतः ॥ ९ ॥

इति श्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धनमठाधीश्वर शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामिशिष्य पण्डित स्वामि श्रीशङ्करब्रह्मण्यदेवतीर्थ विरचितं जगदम्बाष्टकम् ।

---

श्रीगणेशाय नमः ।



# अथ गणेशाष्टकम् ।

सुराराध्यो वन्द्यस्सकलजगतामिष्टफलदः ।
त्रिशूली विघ्नेशः शितपरशुपाशिस्त्रिनयनः ॥
गणाध्यक्षो दक्षो दनुजकुलभक्षो भवसुतो ।
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ १ ॥
गले बिभ्रन्मालां रविकरनिभां रक्तकुसुमां ।
सुमौली रक्ताक्षः परमशुचिरक्ताम्बरधरः ॥
सुवक्त्रो भालेन्दुर्नगपतिकिशोरीस्तनधयो ।
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ २ ॥
निरातङ्को भीमस्सकलगुणसीमा हितकरो ।
दयासिन्धुर्देवोऽखिलगुणिगणोद्गीतचरितः ॥

प्रहर्त्ता विघ्नानां कनकरुचिरस्तुन्दिलवपु ।
र्गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ ३ ॥
लभन्ते नाभीष्टं फलमपि जनाः कर्म्मनिरता ।
न योगं योगज्ञा विरतिमनसो नापि विरतिम् ॥
पठन्तो नो विद्यां मुहुरपि यदाराधनमृते ।
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ ४ ॥
यदीयं शृण्वन्तो निजहृदि पठन्तस्सुचरितं ।
धनं धान्यं धामाद्भुतनरपतित्वं सुमतिताम् ॥
लभन्ते मोदन्ते नृषु सुकृतिनो मानवगणा ।
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ ५ ॥
मुदा लुण्ठन् देवो गिरिवरसुतोत्सङ्गभवने ।
चरन् क्रीडां नित्यं सहजगुहदेवेन बलिना ॥
ब्रुवन् वाचो रम्याः पशुपतिमनोमोदजनिका ।
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ ६ ॥
कपित्थैर्जम्बीरैरभिनवफलैः प्रीतिजनकै
र्जपापुष्पैर्धूपैर्मधुरसयुतैर्मोदकमयैः ॥

महाभोज्यैरच्र्चानिहितमनसामार्त्तिहरणो
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥७॥
महावीरो धीरो निगमतरुकीरोऽमृतमयो
यतो जातं विश्वं विविधरचनाभोगसुभगम् ॥
तमाखुस्सन्धत्ते सुखकरमहो पृष्ठपिठरे
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥ ८ ॥
इदं स्तोत्रमधीयानो मुञ्चति सर्वतो भयम् ।
कामान्सर्वानवाप्नोति गजाननप्रसादतः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य गोवर्द्धनमठाधीश्वर-
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामिशिष्य
पण्डितस्वामि श्रीशङ्कर ब्रह्मण्यदेव तीर्थ
विरचितं गणेशाष्टकम् ।

---

नमो भगवते सूर्याय ।



# अथ सूर्य्याष्टकम् ।

तपस्यन्तस्सन्तो यमनियमवन्तश्चिरतरं ।
समन्तेऽन्यान्देवान् कथमपि नरास्संविषयितुम् ॥
स्वयन्तेषां दृष्टिं तरुणकरुणयायासि तरणे ।
तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥ १ ॥
हरिश्शम्भुर्ब्रह्मा गणपतिमुखा ये सुरगणाः ।
श्रुतास्ते श्रोत्राभ्यामिह न तु नृणां तैः परिचयः ॥
प्रसिद्धस्त्वं देवस्सकलजगतामक्षिविषय ।
स्तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥ २ ॥
समायात्याहूतिर्हुतिभुजि भवन्तं समक्षिता
भवज्जाता वृष्टिर्निखिलजनसंघं सुखयति
अतस्त्वम्भानोऽतश्चरसि भुवने भूतभृतये

तमो हार्द्रं सान्द्रं त्वमपनय मे वासरमणे ॥ ३ ॥
निमज्जेत्संसारो निविडतमसि प्रोज्झित सुखो
भवेच्छ्रौतं कर्म स्मृतिनिगदितं वा क्व जगति
भवेद् ध्वान्ताराते यदिच तव भानोरनुदयः
तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥ ४ ॥
सकृद् ध्यातुर्ध्यातं हरति हृदयानन्ततपनं
वरेण्यं भर्गस्ते निजहृदयतापोपहृतये ॥
नरा ध्यायन्ते तत्प्रतिदिनमहो भास्कर मह
स्तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥ ५ ॥
कथं पूषोदेति व्रजति कथमस्तं क्व वसति
किमाधारो धत्ते वियति गतिमूर्द्धां न पतति
वदन्त्येतां वाचामनधिगतशास्त्रा हतधिय
स्तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥ ६ ॥
त्वमन्नं त्वं प्राणस्त्वमसि बहिरन्तस्त्रिजगतः
स्वयं ज्योतिः सूर्य्यश्रुतिवचनतात्पर्यविषयः ॥
यजन्तेऽतो लोकाः प्रथितयशसं त्वा प्रतिदिनं

तमो हार्द्दं सान्द्रं त्वमपनय मे वासरमणे ॥ ७ ॥
रवे रक्ताहस्ते कनकपुरुषो मण्डलगतो
य एष श्रुत्या यो बुधसकलपापोपहतये
निरुक्तस्त्वं सोऽसौ भवसि भजतां पापहतये
तमो हार्द्दं सान्द्रं त्वमपनय मे वासरमणे ॥ ८ ॥
सूर्य्याष्टकमिदं पुण्यं यः पठेत्सूर्य्यसम्मुखे ।
सर्वपापविनिर्मुक्तस्सूर्य्यलोके महीयते ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य गोवर्द्धनमठाधीश्वर शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थ स्वामि शिष्य पण्डित-स्वामि श्रीशङ्करब्रह्मण्यदेवतीर्थविरचितंसूर्य्याष्टकम् ।



नमो विष्णु देवाय ।



# अथ विष्णुदेवाष्टकम् ।

गुहागूढं सत्यं श्रुतिशतरहस्यं सुखमयं
पुराणं प्रत्यक्षं यमजमचलं योगनिरताः ॥
महाधीरा मत्वा जगदिदमभेद्यं प्रजहते
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥१॥
न यो द्रष्टुं शक्यो निखिलकरणैर्बाह्यविषयै
र्विना यं नो शक्तः किल करणवर्गो विषयितुम् ॥
परशुद्धो नित्यो निखिलकरणग्रामविधुरः
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥२॥
यतो भीतो वातस्चरति सततं शासनरतो

यतो भीतस्सूर्य्यस्तपति विततं विश्वमखिलम् ॥
यतो भीताश्चैते यमदहननाकाधिपतयः
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥३॥
न विद्यन्ते यस्मिन्नजर अमरे वृत्यतिशया
निचाय्यायं मुक्तो जनिमृतिभयाद्यं विहरति ॥
श्रिता लोका यत्राश्रितिरपि न यस्यास्तिवृहत
स्सवै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥४॥
न यं सूर्य्याचन्द्रावनिलतडितस्तारकगणाः
प्रकाशन्ते देवं चकितमनसस्तेन विधृताः ॥
इदं सर्वम्भातं भवति नितरां यस्य महसा
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥५॥
न सांख्यैर्योगैर्वा प्रणिहितमनोभिः प्रतिदिनं
नवा काणादैर्यस्सुदृढतरतर्कात्मनिपुणैः ॥
समादिष्टो द्रष्टाऽखिलजननिविष्टोऽपि परम
स्स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥६॥
महान्तो यज्वानो विजितमनसश्चापि यमिनो

लभन्ते नो मुक्तिङ्कथमपि यदावेदनमृते ॥
अलभ्यो व्याख्यानैश्श्रुतिशतपथैर्यो न विदित
स्स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥७॥
यतश्चेदं सर्वं भवति य इदं यश्च सकलं
स्थितं यस्मिन्सर्वम्प्रविशति च यत्रैव सततम् ॥
न भिन्नो यो भेदैर्गतगलितभेदैरधिगत
स्स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥८॥
य एतद्वैष्णवं स्तोत्रं ज्ञात्वा विष्णुमयं जगत्
अहरहः पठेच्छुद्धो विष्णुरेव न संशयः ॥ ९ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्य्य गोवर्द्धनमठाधीश्वर
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामिशिष्य पण्डित-
स्वामि श्रीशङ्करब्रह्मण्यदेवतीर्थविरचितं
विष्णुदेवाष्टकम् ।

———

ॐ तत्सत्

नमः परमात्मने ।



अथ

# चित्तत्त्वनिरूपणम् ।



प्रत्यक् शान्तं मानातीतं ।
कर्म्माध्यक्षं सर्वावासम् ॥
एकं गूढं सत्यं नित्यं ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १ ॥
विद्युत्तारा स्सूर्य्यश्चेन्दु ।
र्य्येनाभान्ति स्वस्मिन् सम्यक् ॥

नैतैर्भास्यं बुद्ध्यारूपं ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ २ ॥
पाणीपादौ नेत्रे श्रोत्रे ।
नो यः स्पृष्टो गन्धादाद ॥
मुख्यं दृष्टं श्रोतं घ्रातं ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ ३ ॥
वायुर्वह्निः सूर्यश्चन्द्रो ।
मृत्युश्चैषां भीतिर्यस्मात् ॥
नो भीर्यस्य ज्ञातुर्ज्ञातं ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ ४ ॥
यस्य त्रीहि ब्रह्मतन्त्रे ।
मृत्युर्देवो यस्यास्त्याज्यम् ॥
नेत्थं वेद्यं सर्वव्याप्तं ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ ५ ॥
विद्वद्वेद्यं दोषाबाध्यं ।
बाधाधारं बाधाहीनम् ॥

बोधाविद्धं शुद्धं बुद्धं ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ६ ॥
अङ्घ्रेरङ्घ्रिर्वाचोवाचा ।
श्रोत्रश्रोत्रं चक्षुश्चक्षुः ॥
प्राणप्राणं काष्ठाभूतं ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ७ ॥
नो यत्पूर्वं नो यत्कार्य्यं ।
नो यस्यस्तस्साम्याधिक्ये ॥
नो यद्वोक्तृ प्राणप्राणो ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ८ ॥
नो यस्यान्तो नो यद्ग्राह्यं ।
नो यस्यादिर्नो यद् वाह्यम् ॥
नो यद् दृश्यं द्रष्टुर्द्रष्टृ ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ९ ॥
नाहं देवो नाहं यक्षः ।
नाहं मर्त्यो नाहं रक्षः ॥

नाहं मूढो नाहं दक्षः ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ १० ॥
नाहं विप्रो नाहं क्षत्रं ।
नाहं वैश्यो नाहं शूद्रः ॥
नाहं देहो नाहं देही ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ ११ ॥
नाहं पूज्यो नाहं भक्तः ।
नाहं भिक्षु र्नाहं रक्तः ॥
नाहं क्षीणो नाहं शक्तः ।
यश्चित्तत्त्वं तद्ब्रह्माहम् ॥ १२ ॥
नाहं जङ्घा नाहं कक्षा ।
नाहं पृष्ठं नाहं वक्षः ॥
नाहं पक्षी नाहं पक्षः ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ १३ ॥
नाहं दाह्यो नाहं दग्धा ।
नाहं वाच्यो नाहं वक्ता ॥

नाहं ग्राह्यो नाहं त्यक्ता ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ १४ ॥
नाहं छेद्यो नाहं छेत्ता ।
नाहं क्लेद्यो नाहं क्लेत्ता ॥
नाहं भेद्यो नाहं भेत्ता ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ १५ ॥
नाहं वेद्यो नाहं वेत्ता ।
नाहं क्रय्यो नाहं क्रेता ॥
नाहं जय्यो नाहं जेता ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १६ ॥
देवे दैत्ये शुद्धे हीने ।
मन्दे मर्त्ये दीनेऽधीने ॥
तन्त्रे मन्त्रे घस्रे रात्रौ ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १७ ॥
बाह्येऽबाह्ये धाराधारे
यज्ञे होमे हेत्रोहारे ।

सर्पे रूप्ये शुक्तौ रज्जौ ॥
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १८ ॥
रागे रोगे भोगे शोके ।
काके काये योगे लोके ॥
भोग्ये काम्ये साम्येऽसाम्ये ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १९ ॥
कृष्णे शुक्ले पीते रक्ते ।
लोभे क्रोधे सक्ते भक्ते ॥
बोधे रोधे यागे भागे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २० ॥
शस्त्रे छेदे शास्त्रे वेदे ।
सारेऽसारे भेदेऽभेदे ॥
पापे पुण्ये ह्रस्वे दीर्घे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २१ ॥
शत्रौ मित्रे पुत्रेऽमत्रे ।
वैश्ये विप्रे शूद्रे क्षत्रे ॥

म्लेच्छे वृत्ते कृच्छ्रे छत्रे ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ २२ ॥
नेत्रे रूपे घ्राणे गन्धे ।
श्रोत्रे शब्दे स्पर्शे सङ्गे ॥
हस्ते पादे गुह्ये लिङ्गे ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ २३ ॥
भक्ष्ये भोज्ये लेह्ये चोष्ये ।
हव्ये हार्दे पेये पोष्ये ॥
भाष्येऽभाष्ये कार्ये ऽकार्ये ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ २४ ॥
प्राणे बुद्धौ बध्ये बन्धौ ।
स्वप्ने सुप्तौ बोधे सन्धौ ॥
स्थूले सूक्ष्मे हेतौ पिण्डे ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ २५ ॥
आदावन्ते मध्येकाले ।
विश्वे स्वाप्ने प्राज्ञे भाले ॥

हानौ हेये सुखदे तुण्डे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २६ ॥
भस्मे भानौ चन्द्रे चारे ।
भूमौ नीरे वायौ वारे ॥
शक्रे चक्रे तक्रे नक्रे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २७ ॥
बाले वृद्धे यूनि प्राज्ञे ।
गूढे मूढे मेषे छागे ॥
चण्डे मण्डे गण्डे खण्डे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २८ ॥
यक्षे पक्षेऽध्यक्षे लक्ष्ये ।
कक्षे दक्षे रक्षो भक्ष्ये ॥
हव्ये कव्ये गद्ये पद्ये ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २९ ॥
मत्ते धूर्ते धीरे क्रूरे ।
चित्ते वित्ते वस्ते वीरे ॥

वाटे वासे नद्यास्तीरे ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥३०॥
दाने पथ्ये रथ्या पङ्के ।
श्रान्ते भ्रान्ते दान्ते रङ्के ॥
नीचे श्रेष्ठे मञ्चे तङ्के ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३१ ॥
कूपे वाप्यां पाथः पात्रे ।
कीले सूच्यां शङ्कौ दात्रे ॥
श्राव्येऽध्याप्ये ग्रन्थे छात्रे ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥३२॥
नाट्ये गेये गाने गाथे ।
माने मेये मोदे बाधे ॥
सिद्धे साध्ये सिद्धौ संघे ।
यश्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३३ ॥
मद्रे क्षुद्रे भद्रे भङ्गे ।
कृष्णे कीटे रामे रङ्गे ॥

हव्ये भव्ये गव्येऽसङ्गे ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ३४ ॥
वर्णौ पर्णौ सर्णौ कन्ध्रे ।
विन्ध्ये सिन्धौ गर्त्ते रन्ध्रे ॥
सर्वाभासं साक्षात्साक्षि ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ३५ ॥
दुग्धं सर्पिर्दग्धं दाहः ।
मेदो मज्जा मुग्धं वाहः ॥
धेनुर्हस्ती नीरे ग्राहः ।
माया मोहोऽसत्सन्नाहः ॥ ३६ ॥
भारो भारी भेरी दण्डः ।
बालो वृद्धो भार्य्या पण्डः ॥
धूर्त्तो मूर्खो मत्तो मण्डः ।
कामी वामी लोभी चण्डः ॥ ३७ ॥
ब्रह्मा विष्णुः शम्भुर्गङ्गा ।
गेयं गम्यं गीता नङ्गः ॥

ध्येयं ध्यानं ध्याता भृङ्गः ।
द्रष्टा दृश्यं नास्थं रङ्गः ॥ ३८ ॥
यानं यामस्त्वायं प्रातः ।
मित्रं पुत्रो माता भ्राता ॥
भानं भास्यं भामा तातः ।
यागोऽध्वर्युः स्तोतोद्गाता ॥ ३९ ॥
रेतः सेकः पोतः पाकः ।
भूमि र्वन्हिः कृष्णः काकः ॥
पाथो वायुर्भेकः शाकः ।
नेयं नेता नीतिर्नाकः ॥ ४० ॥
दानं दाता दृष्टि र्दोषः ।
मानं माता मुष्टि र्मोषः ॥
सूर्यश्चन्द्रस्तापस्तोषः ।
खड्गो वीरः कृष्टिः कोषः ॥ ४१ ॥
वेश्या वश्यो विष्टिर्वेषः ।
लेख्यं लेखो रेखामेषः ॥

पिष्टं पेष्यं पुष्टिः पेषः ॥
शाक्यः शाक्तः शक्तिः शेषः ॥ ४२ ॥
देहः प्राणश्चित्तं बुद्धिः ।
जीवो विद्या क्लेशाः शुद्धिः ॥
आशा कालो मुक्तिर्बन्धः ।
शब्दो रूपं स्पर्शो गन्धः ॥ ४३ ॥
हस्तौ पादौ मूर्धा केशाः ।
ऊर्ध्वश्चाधो मध्यो देशः ॥
धर्माधर्मौ मोहावेशः ।
पूर्णो लेशः सृष्टिः सेशा ॥ ४४ ॥
एतत्सर्वं यस्मिंस्तथ्यं ।
भाति स्वप्ने यद्वद् दृश्यम् ॥
सर्वस्यूतं सर्वासक्तं ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ४५ ॥
एतन्मर्त्यः पाठंपाठं ।
श्रद्धावित्तो नित्यं भक्त्या ॥

क्षाहं दाहं दोषान् सर्वान् ।
जीवन्मुक्तो ब्रह्माप्येति ॥ ४६ ॥
यस्माङ्ख्येषु कृतश्रमो
मुहुरहो योगेषु योगीश्वरो ।
वेदान्तेषु विदांवरोऽति-
निपुणः ख्यातो यशस्वीकुले ॥
सोऽयं जातिकुलाभिमान-
मुचितं त्यक्त्वा तुरीयाश्रमे ।
स्थित्वा तत्त्वनिरूपणं
समकरोद् ब्रह्मण्यदेवो यतिः ॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोवर्धन
मठाधीश्वर शङ्कराचार्य श्रीमन्मधुसूदन-
तीर्थस्वामिशिष्य पण्डितस्वामि
श्रीशङ्कर ब्रह्मण्यदेवतीर्थ विर-
चितम् चित्तत्त्वनिरूपणम् ।

